नं० ४८७०

नाम- शिवपञ्चाक्षरविधिः

कर्त्ता - ×

पत्र संख्या - ५ पत्राणि सं० ×

विषयः - तन्त्रम्

श्रीगणेशाय नमः ॥ अथ वक्ष्ये महेशस्य मंत्रान्सर्वसमृद्धिदान् ॥ यैः पूर्वमृषयः प्राप्ताः शिवसायु
ज्यमंजसा ॥ १ ॥ हृदयं च परं साक्षि तां ततोनंतान्वितो मरुत् ॥ पंचाक्षरो मनुः प्रोक्तस्ताराद्योयं षडक्षरः
॥ २ ॥ वामदेवो मुनिः छंदः पंक्तिरीशोस्य देवता ॥ षड्भिर्वर्णैः षडंगानि कुर्यान्मंत्रस्य देशिकः ॥ ३ ॥ मं
त्रवर्णादिकान्यस्येत् संचमूर्तीर्यथाक्रमं ॥ तर्जनीमध्ययो रंध्यानामिकांगुष्ठके पुनः ॥ ४ ॥ ध्यायेत्
ध्ववारुणोदीच्यातास्वनुक्तस्वरूपाघोरसद्यवामेशावसंसाकाः ॥ वक्त्रहृत्पादगुह्येषु निजमूर्ध
न्यताः पुनः ॥ ५ ॥ प्राग्याम्यवारुणोदीच्यमध्यवक्त्रेषु पंचसु ॥ मंत्रांगानि न्यसेत्स्वधाजातिषु क्रौ
निवृत्याता ॥ ६ ॥ कुर्वीत गोलकन्यासं रक्षायै तदनंतरं ॥ हृदि वक्त्रे सयोरूर्वोः कटिनाभौ हृदि
पार्श्वयोः ॥ ७ ॥ पृष्ठे हृदि ततो मूर्ध्नि वदने नेत्रयोर्नसोः ॥ दोःपत्संधिषु साग्रेषु विन्यसेत्तदनंत
रं ॥ ८ ॥ शिरोवदनहृत्कुक्षिसोरुपादद्वये पुनः ॥ हृदि वक्त्रेंबुजे टंके मृगाभयवरेषथ ॥ ९ ॥ वक्त्रां
सहृत्सु पादोरुजठरेषु क्रमान्न्यसेत् ॥ मूलमंत्रस्य षड्वर्णान्यथावद्देशिकोत्तमः ॥ १० ॥ मूर्ति
भालोदरांसेषु हृदये ताः पुनर्न्यसेत् ॥ पश्चादनेन मंत्रेण कुर्वीत व्यापकं सुधीः ॥ ११ ॥ न

मोस्तुस्थाणुरूपायज्योतिर्लिंगात्मतात्मने॥ चतुर्मूर्तिवपुःछायांभासितांगायशंभवे॥१२॥ एवं
न्यस्तशरीरोसौचिंतयेत्सार्वतीपतिं॥ ध्यायेन्नित्यंमहेशंरजतगिरिनिभंचारुचंद्रावतंसंरत्नाक
ल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नं॥ पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिंव
सानंविश्वाद्यंविश्वबीजंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रं॥ तत्वलक्षंजपेन्मंत्रंदीक्षितःशैव
वर्त्मना॥ तावत्संख्यासहस्राणिजुहुयात्पायसैःशुभैः॥ ततःसिद्धोभवेन्मंत्रःसाधकाभीष्ट
सिद्धिदः॥ देवंसंपूजयेत्पीठेवामादिनवशक्तिके॥ वामाज्येष्ठाततोरौद्रीकालीकलपदादि
का॥ विकिरिणपदपाप्रोक्ताबलाद्याविकिरिण्यथ॥ बलप्रमथिनीपश्चात्सर्वभूतदमन्यथ
मनोन्मनीतिसंप्रोक्ताःशैवपीठस्यशक्तयः॥ नमोभगवतेपश्चात्सकलगादिवदेत्पुनः॥ गुणा
त्मशक्तियुक्तायततोनंतायतत्परं॥ योगपीठात्मनेभूयोनमस्तारादिकोमनुः॥ अमुनामनुना
दद्यादासनंगिरिजापतेः॥ मूर्तिंमूलेनसंकल्प्यतत्रावाह्ययजेच्छिवं॥ कर्णिकायांयजेन्मू
र्तऽशानमीशानदिग्गतं॥ शुद्धस्फटिकसंकाशंदिक्षुतत्पुरुषादिकान्॥ पीतांजनश्वेतरक्ताःप्र

ध्यानसहस्रायुधाः।।चतुर्वक्त्रसमायुक्तायथावत्संप्रपूजयेत्।।कोणेपश्चिमेनैर्ऋतेतान्ध्यात्वातेजोरू
पाःकलाक्रमात्।।अंगानिकेशरस्थानिविद्येशान्पत्रगान्न्यजेत्।।अनंतंसूक्ष्मनामानंशि
वोत्तममनंतरं।।एकनेत्रमेकरुद्रंत्रिमूर्तिंतदनंतरं।।पश्चाच्छ्रीकंठनामानंशिखंडिनमितिक्रमा
त्।।रक्तपीतासितारक्तधूम्ररक्ताजनासितान्।।किरीटार्पितबालेंदुरूपमस्याम्भूषणान्विता
न्।।त्रिनेत्रान्शूलवज्राख्यचापहस्तान्मनोरमान्।।उत्तरादिपजेत्पश्चादुमाचंडेश्वरंपुनः।।
ततोनंदिमहाकालौगणेशवृषभौपुनः।।अथभृंगिरिटस्कंदमेतान्पद्मासनस्थितान्।। 2
स्वर्णतोयारुणश्यामशुक्लेंदुसितपाटलान्।।इंद्रादयस्ततःलःपूज्यावज्राद्यायुधसंयुता।।
इत्थंसंपूजयेद्देवंसहस्रंनियतोजपेत्।।सर्वपापविनिर्मुक्तःप्राप्नुयाद्वांछितांश्रियं।।
द्विसहस्रंजपेद्रोगान्मुच्यतेनात्रसंशयः।।त्रिसहस्रंजपेन्मंत्रंदीर्घमायुरवाप्नुयात्।।
सहस्रंचध्यायजपेत्सर्वान्कामानवाप्नुयात्।।आज्यान्वितैःतिलैःशुद्धैर्जुहुयात्सुक्ष
मादरात्।।उस्यालजनिताक्लेशान्नाशयन्नात्रसंशयः।।शतलक्षंजपेत्साक्षाच्छिवो 2

भवतिमानवः॥ ॥इतिशारदातिलकेशिवपंचाक्षरविधानं॥ ॥हृदयंचपरंसाक्षिलोलो
नंतान्वितोमरुत्। पंचाक्षरोमनुःप्रोक्तस्ताराद्योयंषडक्षरः। अनंतः अकारांतः। मरुत्यका
रः। इतिपंचाक्षरः। प्रणवादिःषडक्षरः। ततः ॐनमःशिवायेति। द्विविधोप्युपास्यः। शूद्रस्यपं
चाक्षरएवइतिभेदः। तत्राप्येतदेवनमोंतंतुवंआलमपिदाक्षयेदिति। आगमवाक्यात्। शू
द्रायशिवायनमइतिदद्यात्। शूद्रस्यपंचभिर्वर्णैः पंचएकंसमस्तेनइतिषडंगः। अस्यमंत्र
स्यवामदेवऋषिः। ईशोदेवता। पंक्तिश्छंदः। जपेविनियोगः। ततोमूर्तिन्यासंकुर्यात्। ॐ
नंतत्पुरुषायतर्जनीभ्यांनमः। ॐमंअघोरायमध्यमाभ्यांनमः। ॐशिंसद्योजातायक
निष्ठिकाभ्यांनमः। ॐवांवामदेवायअनामिकाभ्यांनमः। ॐयंईशानायअंगुष्ठाभ्यां·
पुनः ॐनंतत्पुरुषायमुखायनमः। ॐमंअघोरायहृदयाय· ॐशिंसद्योजातायपादा
भ्यां ॐवांवामदेवायगुह्याय· ॐयंईशानायशिरसे· पुनः ॐनंतत्पुरुषायपूर्वमुखा
य· ॐमंअघोरायदक्षिणमुखाय ॐशिंसद्योजातायपश्चिममुखाय· ॐवांवामदेवा

यउत्तरमुखाय ॐ यं ईशानाय उपरिमुखाय। ॐ अंगुष्ठाभ्यां नमः। ॐ नं तर्जनीभ्यां॰ ॐ मं मध्य
माभ्यां॰ ॐ शिं अनामिकाभ्यां॰ ॐ वां कनिष्ठिकाभ्यां॰ ॐ यं करतलकरपृष्ठाभ्यां॰ ॐ हृदया
य॰ ॐ नं शिरसे स्वाहा। ॐ मं शिखायै वौषट्। ॐ शिं कवचाय हुं। ॐ वां नेत्रत्रयाय वौषट्। ॐ यं
अस्त्राय फट्। ततो गोलकन्यासं कुर्यात्। ॐ हृदयाय॰ नं मुखाय॰ मं दक्षिणांसाय॰ शिं वाम
साय॰ वां दक्षिणोरवे॰ यं वामोरवे॰ इत्येकोन्यासः। ॐ कण्ठे॰ नं नाभ्यां। मं दक्षिणपार्श्वाय॰
शिं वामपार्श्वाय॰ ॐ वां पृष्ठे॰ ॐ यं हृदयाय॰ द्वितीयः। ॐ मूर्ध्ने॰ नं मुखाय॰ मं दक्षिणनेत्रा
3 य॰ शिं वामनेत्राय॰ वां दक्षिणनासिकायै। यं वामनासिकायै॰ तृतीयः। ॐ नं मं शिं वां यं द—
क्षिणबाहुपंचसंध्यग्रेभ्यः। चतुर्थः। ॐ नं मं शिं वां यं वामबाहुपंचसंध्यग्रेभ्यः। पंचमः। ॐ नं
मं शिं वां यं दक्षिणचरणपंचसंध्यग्रेभ्यः। षष्ठः। ॐ नं मं शिं वां यं। वामचरणपंचसंध्यग्रेभ्यः।
सप्तमः। ॐ शिरसे॰ नं मुखाय॰ मं हृदयाय॰ शिं कुक्षिभ्यां॰ वां ऊरुभ्यां॰ यं पादाभ्यां॰ इत्यष्ट
मः। ॐ हृदयाय॰ नं मुखाय॰ मं दक्षिणोपरिकेरेटकाय॰ शिं वामोपरिकरे मगाय। वां वाम। २

धः करे अभयाय॰ यं दक्षिणाधः करे वराय॰ इति नवमः।ॐ मुखाय॰ नं अंसाभ्यां॰ मं हृदयाय॰ शिं पादाभ्यां॰ वां ऊरूभ्यां॰ यं जठराय॰ इति दशमः। ॐ नं तत्पुरुषाय ललाटाय॰ ॐ मं अघोराय उदराय॰ ॐ शिं सद्योजाताय दक्षिणांसाय॰ ॐ वां वामदेवाय वामांसाय॰ ॐ यं ईशानाय हृदयाय॰ ततः नमोऽस्तु स्थाणुरूपाय ज्योतिर्लिंगामृतात्मने। चतुर्मूर्तिवपुः छायाभासितांगाय शंभवे। अनेन मंत्रेण व्यापकं कुर्यात्। एवं न्यस्तशरीरो सौ विंतयेत्पार्वतीपतिं। ध्यानं। ध्यायेन्नित्यं महेशं रजतगिरिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नं। पद्मासीनं समंतात्स्तुतिममरगणैर्व्याघ्रकृत्तिं वसानं विश्वाद्यं विश्ववंद्यं निखिलभयहरं पंचवक्त्रं त्रिनेत्रं॥ दक्षिणकरयोः परशुवरौ। वामयोर्मृगाभये। सुबोधमन्यत्। पुरश्चरणमाह। चतुर्विंशतिलक्षं पुरश्चरणं कुर्यात्। तावत्सहस्राणि पायसेन होमं कुर्यात्। ततः सिद्धो मंत्रो भवति। साधकानाम भीष्टदश्चा ततः पूजां कुर्यात् पीठे। आदौ पीठशक्तीः पूजयेत्। वामायै नमः। ज्येष्ठायै नमः। रौद्रायै॰ काल्यै॰ कलविकरिण्यै॰ बलविक

रिण्यै॰ बलप्रमथिन्यै॰ सर्वभूतदमन्यै॰ मनोन्मन्यै॰ ॐ नमो भगवते सकलगुणात्मशक्तियुक्ताय
अनंताय योगपीठात्मने नमः इति पीठमंत्रेण पीठं पूजयेत्। अनेनैव मनुना आसनं दद्यात्। मू
लमंत्रेण हृदये मूर्त्तिं ध्यात्वा प्रतिमायामावाह्य देवं पूजयेत्। कर्णिकायामीशाने। ॐ नं ईशा
५ नाय नमः इति शुद्धस्फटिकसंकाशं पूजयेत्। पूर्वदिशि। ॐ मं तत्पुरुषाय नमः इति पीतवर्णं पूजये
त्। दक्षिणाक्षे दिशि। ॐ शिं अघोराय नम इत्यंजनवर्णं पूजयेत्। पश्चिमदिशि। ॐ वां सद्योजा
ताय नम इति श्वेतवर्णं पूजयेत् उत्तरदिशि। ॐ यं वामदेवाय नम इति रक्तवर्णं पूजयेत् सर्व
तोमुखाः। शिवसदृशायुधाः पूज्याः। पुनराग्नेयादिकोणेषु आग्नेयच पुनः कलाः पूज्याः।
आग्नेये॰ ॐ नं निवृत्यै नमः॰ नैरृत्यां॰ ॐ मं प्रतिष्ठायै नमः॰ वायव्यां॰ ॐ शिं विद्यायै॰ ई
शान्यां॰ ॐ वां शांतायै नमः पुनराग्नेयां॰ ॐ यं शांत्यतीतायै नम इति पूजयेत्। ॐ हृ
दयाय॰ ॐ नं शिरसे स्वाहा। ॐ मं शिखायै वौषट्। ॐ शिं कवचाय हुं। ॐ वां नेत्रत्रयाय
वौषट्। ॐ यं अस्त्राय फट् इति केसरेषु पूजयेत्। पुनश्च अष्टसु पत्रेषु। अनंताय नमः। ४

रक्ताय॰ सूक्ष्मनाम्ने॰ पीताय॰ शिवोत्तमाय॰ सिताय नमः॰ एकनेत्राय॰ आरक्ताय॰ एक
रुद्राय॰ सन्नाय॰ त्रिमूर्तये॰ रक्तवर्णा॥ श्रीकंठाय॰ नीलांजनवर्णाय॰ शिखंडिने॰ अधि
ताय॰ एतान्किरीटबालचंद्रानूपद्मासनान् भूषणभूषितान्त्रिनेत्रान्दक्षिणोर्ध्वकरे शूलम
5 धःकरे बाणं वामोपरिकरे वज्रमधोमधनुर्दधानान्मनोरमान्पूजयेत्॥ ततो देवाद्दक्षिणभा
गे उमायै॰ स्वर्णवर्णायै॰ चंडेश्वराय जलवर्णाय॰ पूर्वदिशि नंदिने अरुणाय॰ महाका
लाय श्यामाय॰ श्यामभागे गणेशाय मुक्ताभाय॰ वृषभाय इंदुवर्णाय॰ पश्चिमदिशि
भृंगिरिटिने॰ सिताय॰ स्कंदाय पाटलाभाय इत्येतान्पद्मासनास्थितान्पूजयेत्॥ ततो
बहिः इंद्राय सायुधाय॰ अग्नये सा॰ यमाय सा॰ निर्ऋतये सा॰ वरुणाय सा॰ वायवे सा॰ सो
माय सा॰ ईशानाय सायुधाय नम इति पूजयेत्॥ ततो मूलमंत्रेण षोडशोपचारैर्देवं सं
पूज्य तद्दत्तं प्रसादं शिरस्याधाय स्तवैश्च स्तुत्वा हृद्गतं हृदये संस्थाप्य मृत्तिकारंडके सं
स्थापयेत्॥ ॥इति शिवपंचाक्षरविधिः॥

